योर्मुख्ये कार्यसंप्रत्यय इति न्यायद्वयानुगुण्यात् स्वाधिकरणक्षणवृत्तिप्रागभावप्रतियोगिक्षणसंबंधरूपोत्पत्तिजनकताया विमर्शे स्वाचार्यप्राक्कालवर्तिप्रातिस्विकत्वरूपतत्तद्व्यक्तित्वावच्छिन्नद्वैपायनदेवर्षिपशुपतिप्रभृतिवृत्त्याचार्यत्वपर्यन्तानुधावनेपि घट्टकुटीप्रभातन्यायेन

ब्राह्मं संवत्सरशतमेकाहः शैव उच्यते।
शैववर्षशतादेकं निमिषं वैष्णवं विदुः

इतिवाक्यात्स्वोट्टंकितत्वाधुनिकत्वदोषस्य तादवस्थ्येन तद्धेतो रेव तत्त्वे किन्तेनेति न्यायेन पुरुषोत्तमरूपविश्रामस्थानालम्बनस्यैव समुचितत्वात्

पुरुषोत्तमएव पुष्टिमार्गीयगद्योपदेष्टृत्वरूपं गुरुत्वं बाधप्रतिसंधानमन्तरा न पुरहरप्रभृतिषु, तेषां मर्यादामार्गीयत्वेन पुष्टिपथप्रवर्तकत्वाभावात्। तत्र पुरहरस्तु सुबोधिन्यादिस्वमार्गीयसंदर्भसंदोहेषु गुणावतारत्वेनावेशित्वेन (शक्रशर्वपरमेष्ठिपुरोगाः)

इत्यत्र सुबोधिन्यां पुष्टिमार्गीयतत्त्वानभिज्ञत्वकथनेन मर्यादामार्गीयत्वस्फोरणेन न पुष्टिमार्गाचार्यो भवितुमर्हति । निजाचार्यास्तु

ज्ञानक्रियोभययुतः कृष्णस्तु भगवान्स्वयम् ॥

इत्यादिपरःशतवाक्यानुकूलपूर्णत्वस्य पूर्णपुरुषोत्तमस्य व्रजजनतासर्वस्वस्य श्रीकृष्णस्य

अग्नित्वं वर्णितं ते कविभिरपि सदा वस्तुतः कृष्ण एवेति

वाक्यात् तादात्म्यविशिष्टत्वेन स्वस्मिन् तारतम्यं महदेव व्यंजयन्ति इति तएव पुष्टिमार्गाचार्याः ॥

किंच

शिवः शक्तियुतः शश्वत् त्रिलिंगो गुणसंवृतः ॥ वैकारिकस्तैजसश्च ता-

मसश्चेत्यहं त्रिधा ॥१॥ ततो विकारा अभवन् षोडशामीषु कंचन ॥ उपधावन् विभूतीनां सर्वासामश्नुते गतिम् ॥ २ ॥ हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः ॥ स सर्वदृगुपद्रष्टा तं भजन् निर्गुणो भवेत् ॥ ३ ॥

इति प्रकरणे भगवतः प्रकृतिपरत्वगुणराहित्यविभूतिमत्त्वानां भजनफलस्य निर्गुणभवनरूपस्य च कथनात् । शिवस्य शश्वच्छक्तियुतत्वसगुणत्वापरत्वविभूतित्वानां सर्वविभूतिप्राप्तिरूपस्य भजनफलस्य च कथनात लिंगार्चनभगवदर्चनयोरविद्धदधिकारित्वनिर्गुणाधिकारित्वाभ्यां च

देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः ॥ स्वाध्यायो वेदवेतृत्वं विष्णुपूजारतिः सदा ॥ १ ॥ दैत्यानां

बाहुशालित्वं मात्सर्यं युद्धसत्क्रिया।
वेदनं नीतिशास्त्राणां हरभक्तिरुदाहृ-
ता ॥ २ ॥ इति

वामनपुराणवाक्याभ्यां दैवसृष्टेर्भगवदाराधनं मुख्यम्, दानवानां लिंगार्चनं मुख्यम्, इति निर्णयस्तस्मात् शिवस्य सत्करणीयत्वनमस्करणीयत्वपूज्यत्वान्यानुषंगिकाणि उपास्यत्वं तु उपेक्ष्यकोटिमभिनिविशते । एतच्च पुरुषोत्तमचरणैर्निपुणतरं प्रहस्तवादे स्फुटीकृतमिति ततो विस्तरेणावधेयम्। अत एव सुबोधिन्यां

एवमुद्धृतभक्तास्तु यद्यन्यं समुपास-
ते ॥ दुःखभाजो भवन्त्येव मुच्यन्ते
हरिणैव तु ॥

इतिश्रीमदाचार्यचरणैरन्याश्रयो निषिद्धः। एवं स्वयंभूत्संगलालितो देवर्षिरपि सततं गुणगानपरतया

तावन्मात्रेण स्वस्थत्वाद्धर्मिविषयकासंभावनाविपरीतभावनादिमत्त्वाच्च मर्यादाध्वानं नातिवर्तते इति क्षोदक्षमम् ।

एतत्समानन्यायेन द्वैपायनो बादरायणः श्रीमदाचार्याणां प्रतिनिधित्वं ज्ञानकलावतारत्वेन समाधिरूपसाधनसंपत्तिपरवशतया भगवद्दर्शनवत्त्वेन मर्यादापथपोषकतया च न भजते । अत एव बादरायणः ।

भक्तियोगेन मनसि सम्यक्प्रणिहितेऽमले ॥ अपश्यत् पुरुषं पूर्णं मायां च तदपाश्रयाम् ॥ १ ॥ इति

स्वगाथामगायत् । नच

पूर्णा भगवदीया ये शेषव्यासाग्निमारुताः ॥ जडनारदमैत्र्याद्यास्ते समुद्राः प्रकीर्तिताः ॥ १ ॥

इति जलभेदे एकप्रक्रमपाठेन बादरायणनिजाचार्ययोः साधारण्यमापादयितुं शक्यमिति शङ्क्यम् ।

भगवत आचार्यस्य वैश्वानरस्य यत्किंचिद्धर्मसाम्येन व्यासादिसाम्यं स्वानुयोगित्वेन प्रतिपादयतः स्वमुखेन स्वोत्कर्षवर्णनदोषभीरुत्वरूपसच्छैलीत्यागस्यानुचितत्वात् । अन्यथा

**अर्थं तस्य विवेचितुं न हि विभुर्वैश्वानराद्वाक्पतेरन्यस्तत्र विधाय मानुषतनुं मां व्यासवच्छ्रीपतिः ॥**

इति वाक्ये मां व्यासवदिति दृष्टांतेन व्याससाम्यं कथमाचार्या वदेयुः न हि भगवता निजाचार्यवत् पुष्टिपथप्रकटनाय व्यास आविर्भावितः किंतु तन्मुखतः शब्दात्मकं भागवतमाविर्भावयितुम् । अर्थस्य भगवद्रूपत्वेन तत्प्रकटने न व्याससामर्थ्यम् किन्तु

न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ! ॥ १ ॥

इति वाक्यात्स्वमात्रकृतिसाध्यत्वादर्थरूपप्रकटनं स्वरूपेणैव भवति इति शब्दात्मकं भागवतं व्यासात् प्रकटितमर्थात्मकं तु श्रीमदाचार्यद्वारेतीयद्धर्मसाधारण्येन यथा तस्मिन् स्वदृष्टांत एवमत्रापि पूर्णभगवदीयत्वमात्रमादाय व्यासादिमध्ये श्रीमदार्याणां गणनेति ध्येयम् । अत एव

गुणातीततया शुद्धान् सच्चिदानन्दरूपिणः । सर्वानेव गुणान्विष्णोर्वर्णयंति विचक्षणाः ॥ तेऽमृतोदाः समाख्यातास्तद्वाक्पानं सुदुर्लभम् ॥ १ ॥

इत्यनेन केवलस्वरूपेण धर्मिमात्रपरतया पुष्टि-

मार्गीयाणां भावस्यामृतोदतुल्यत्वमग्रे व्यवस्थापितम् । मर्यादामार्गीयाणां तु

लोकवेदगुणैर्मिश्रभावेनैके हरेर्गुणान्॥
वर्णयन्ति समुद्रास्ते क्षाराद्याः षट् प्रकीर्तिताः ॥

इत्यत्र क्षारोदादिसमुद्रषट्कप्रातिनिधितया भिन्नत्वेन निरूपणं संगच्छते इति मर्यादामार्गीयो व्यासः पुष्टिमार्गाप्रवर्त्तकः।इदं सर्वं जलभेदटीकायां श्रीकल्याणरायैः ( पूर्णा भगवदीया ये ) इत्यस्य संशयनिराकरणग्रन्थे श्रीहरिरायचरणैश्च स्फुटीकृतम्

॥ व्यासोऽस्माकं गुरुः ॥

इत्यत्र गुरुशब्दप्रयोगस्तु

आचार्यवान् पुरुषो वेद, नैषा तर्केण मतिरापनेयेति ॥ प्रोक्तान्यन्येनैव सुज्ञानाय प्रेष्ठेति श्रुतिभ्याम् ॥

वेदान्तविचारे स्वोट्टंकितत्वरूपदूषणदूषणार्थं व्यासाभिप्रेत एव विचारोऽस्माकं सर्वेषां वेदान्तविचारकाणामिष्ट इत्येतज्ज्ञापनार्थत्वादुपदेष्टृत्वरूपं स्वार्थमभिधातुं कुंठितपौरुषत्वेन ज्ञातव्य इति वासुप्यापिशलेरित्यादिषु पाणिनिकृतापिशलिग्रहणवत् पूजार्थत्वेनानुमत्यर्थ इति गदतां कः शुद्धमध्वानमाविलयितुं प्रतिद्वंद्वीभवन् लक्ष्यते । अन्यथा

कौंडिन्यो गोपिकाः प्रोक्ता गुरवस्साधनं च तत् ॥

इति वाक्यनिर्दिष्टानामपि गुरुपरंपरायां निवेशने कुतो मात्सर्यप्रसरो गुरुशब्दश्रवणमात्रेणोपदेष्टृत्वरूपगुरुकल्पनायास्तुल्यत्वात् । शक्यस्तु ।

एतन्निशम्य भृगुनंदन! साधुवादमिति पद्यव्याख्याने ॥

आदौ श्रीपुरुषोत्तमं पुरहरं श्री
दाख्यं मुनिं कृष्णं व्यासगुरुं शु
तदनु विष्णुस्वामिनं द्राविडम् ॥
तच्छिष्यं किल बिल्वमंगलमहं वंदे
महायोगिनं श्रीमद्वल्लभनामधाम च
भजेऽस्मत्संप्रदायाधिपम् ॥ १ ॥

इतिश्लोकोक्ता गुरुपरंपरा मनसि मनोरमतां नावहति इति अनादित्वार्थमेतन्मार्गस्य पूर्वोक्तप्रमाणैः समर्थिता गुरुपरंपरैव भगवदीयैरादर्तव्येति कथनादुपरम्यते इत्यलम् ॥

इति पुष्टिमार्गीयगुरुपरंपराविचारः

---